प्रकारकत्वमखण्डार्थनिष्ठत्वमित्यपि कल्पनाप्रसङ्गात् । न द्वितीयः । इहेति ब्रह्मचिन्मात्रमनूद्य तत्र सर्वं निषेधयन्त्याः श्रुतेःनिर्विशेषार्थस्वरूपाखण्डत्वस्यैव प्रापकत्वात् । नच तदपि । एतच्छ्रुतिसिद्धसर्वाभावरूपविशेषभावाभावाभ्यां व्याहतेरेव । भेदाभावे कथं सत्यत्वादिवैशिष्ट्यम् विशेषणविशेष्यभावस्य भेदघटितत्वादिति तु अभेदवैशिष्ट्येऽपि समम् । विशेषसमर्थनेन शङ्कानवकाशाच्च । कार्यकारणनिष्ठवाक्यानामप्यभिन्नार्थनिष्ठत्वेनाखण्डार्थनिष्ठवाक्यस्यैवाभावप्रसङ्गाच्च । भेदोऽप्यस्तीति चेत् किं तेन । अभिन्नार्थनिष्ठत्वस्य तथाप्यप्रतिघातात् । लाघवात्तावन्मात्रस्यैवाखण्डार्थत्वोपयोगित्वसंभवाच्च । किंच न तावज्जीवत्वविशिष्टचैतन्यस्य ब्रह्मभेदः । विरोधात् । नापि तदुपलक्षितचैतन्यस्य । उपलक्षकस्यापि काकादेरिव व्यावर्तकत्वावश्यंभावेनैक्यविरोधित्वात् । नहि काकोपलक्षितगृहस्य तदनुपलक्षितगृहांतरैक्यं दृष्टम् । तस्माज्जीवत्वं यत्रारोपितं तस्यैव चैतन्यस्यैक्यं वाच्यम् । तच्च न परस्याप्यनिष्टम् । जीवे जीवत्वारोपासंभवेन कृष्णरामादिष्वेवाज्ञदृष्ट्या तदारोपो वक्तव्यः । तस्य च ब्रह्मैक्यं कस्यानिष्टम् । अपिच यच्छब्दतच्छब्दयोर्हेत्वर्थकयोः सर्वजनसिद्धत्वात् हे श्वेतकेतो त्वं तत्तस्मात् ब्रह्मणो हेतोरसीति अत एवैतदात्म्यमित्युक्तब्रह्मकारणकत्वार्थकस्य मुख्यस्यैव संभवात् किमनया लक्षणया । किंच पदद्वयलक्षणातोप्येकपदलक्षणाया एव लघुत्वात् । हे श्वेतकेतो त्वं तत् तदधीनोऽसीत्यर्थसंभवात् किमनेन द्वासुपर्णेत्यादिश्रुतिविरुद्धार्थेन । नच सा प्रत्यक्षसिद्धभेदानुवादिनीति वाच्यम् । तथापि भेदरूपार्थस्यापरिक्षयात् । नहि प्रत्यक्षसिद्धमग्नेर्हिमभेषजत्वं श्रुत्याऽनूदितमिति नासौ हिमभेषजम् । किंचानुवादमात्रेणाप्रामाण्यमुत दूषणार्थमनुवादेन । नाद्यः । स्वोक्तस्थिरीकरणाय साक्षिवाक्यानुसरणस्य सर्वैः क्रियमाणत्वात् । न द्वितीयः । इति यत् तन्नेति तल्लिंगाभावात्प्रत्युत "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति" इति विरुद्धधर्मकथनेन तस्यैव दृढीकरणात् । न ह्येतदप्यनुवादार्हम् । "अनश्नन्नन्यो अभिचाकशीती"त्यस्य प्रत्यक्षासिद्धत्वात् । "अन्यमीशमस्य महिमानमिति वीतशोक" इति अन्यत्वज्ञानेन दुःखनिवृत्तिरूपमोक्षफलश्रवणाच्च न दूषणार्थमनुवादोऽयम् । ऐक्यवाक्यस्याप्यनिर्णीतार्थत्वेन दूषणाभावाच्च । तस्याप्युक्तरीत्या स्वत्समयप्राप्तैक्यानुवादकत्वसंभवाच्च ।

भ्रांतनिषेधकवाक्यस्य प्रत्यक्षानुगृहीताभ्रांतविधायकवाक्यमिव प्रत्यक्षानुगृहीतभेद-वाक्यमेव च तद्दूषकमस्तु । नाप्यविद्यावच्छिन्नचैतन्यनिष्ठाविद्यकभेदपरा सेति वाच्यम् । "न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुराऽसुरार्चिताः"इति माया-निवृत्तिदशायामपि भेदस्य श्रूयमाणत्वात् । नच बहुतरमायानिवृत्तिपरं तद्वाक्यम् । अल्पीयसी तु माया तत्राप्यस्तीति वाच्यम् । घटत्वावच्छेदकावच्छिन्नयत्किंचित्सद्भावे रक्तघटो नास्तीति विशिष्य निषेधसंभवेप्यत्र घटो नास्तीति सामान्यनि-षेधादर्शनेन मायात्वावच्छेदकावच्छिन्नयत्किंचित्सद्भावे न यत्र मायेति सामान्य-निषेधासंभवात् । "किमुतापर"इति मायानिमित्तककामक्रोधाद्यभावे कैमुत्यं वदता सर्वथा मायाभावस्य प्रागवक्तव्यत्वाच्च । किंच लक्षणायां साक्षाद्गृहीतसङ्गतिक-पदार्थस्यैव परित्यागः । गङ्गापदेन प्रवाहं परित्यज्य तीरस्यैव व्यपदेशान्मुख्यार्थ-योगस्य प्रयोजनस्यैव लक्षणोपयोगिनः पदबोध्यताभावात् । गौण्यां त्वेकविभक्ति-कत्वरूपसामानाधिकरण्यार्थस्य तदानीमेव पदान्तरसमागमवशाद्विशिष्य ग्राह्य-स्यैक्यमात्रस्य प्रच्यावनम् । नतु सिंहदेवदत्तयोरपि । तथाच साक्षात्पदार्थप्रच्या-वनरूपतल्लक्षणातोऽपि विभक्त्यर्थमात्रप्रच्यावनरूपगौण्याश्रयणस्यैवोचितत्वात् । तत्त्वं तत्सदृशोऽसीति परमं साम्यमुपैतीत्यादौ निरूपितब्रह्मसादृश्यपरमेवेदं वाक्य-मस्तु । एवंच "स्तब्ध एयायेति"ति तत्रैवोक्त श्वेतकेतोस्स्तब्धत्वं उद्दालकाख्य-गुरूपसत्तिस्तन्मुखात् श्रवणं ब्रह्मभजकतापसत्वं च युक्तमेव स्यात् । साक्षात्सर्वज्ञ-ब्रह्मरूपत्वे तु कथमिदं युज्येत । तस्मात्स्वरूपोच्छेदकजगन्मिथ्यात्वे न काचिदपि श्रुतिः प्रमाणम् ॥ * ॥

इति श्रीमद्वादिराजयतिकृतं विवरणव्रणं समाप्तम् ॥

॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवः प्रीयताम् ॥

॥ श्रीकृष्णार्पणमस्तु ॥

---

॥ श्रीः ॥

## श्रीमद्वादिराजीयग्रन्थप्रकाशनसमितौ सदस्याः

१. न्यायविद्वान् तर्ककेसरी इत्यादि बिरुदविराजमानाः **पडन्नूरु नारायणाचार्याः** उडुपि श्रीमन्मध्वसिद्धान्तप्रबोधिनी संस्कृतमहापाठशालायां वेदान्तप्रधान पण्डिताः समितिप्रधानाध्यक्षाः

२. वेदान्तरत्नं प्रवचनधुरीण इत्यादिबिरुदभाजः **कट्टे श्रीनिवासाचार्याः** श्रीमदुत्तरादिमठीय उडुपि श्रीमन्मध्वसिद्धान्तचन्द्रिकापाठशालायाः प्रधानपण्डिताः समित्यध्यक्षाः

३. श्री पेजावरमठीय प्रधानसचिव **श्रीमन्निम्याळ नारायणाचार्याः** कोशाध्यक्षाः

४. द्वैतवेदान्तविद्वान् वेदान्तशिरोमणि **अग्रहार नारायण तन्त्रिणः** उडुपि श्रीमन्मध्वसिद्धान्त प्रबोधिनी संस्कृतमहापाठशालायां वेदान्तपण्डिताः कार्यदर्शिनः

५. साहित्यशिरोमणि विद्याभूषण **वि. श्रीनिवास भट्टाः** उडुपि श्रीमन्मध्वसिद्धान्तप्रबोधिनी संस्कृतमहाशालायां साहित्यप्रधानपण्डिताः उपकार्यदर्शिनः

Printed by K. Raghavendra Rao, at Majestic Press, Udipi &
Published by Sri A. Narayana Tantry Secretary Sri Vadirajiya
Grantha Prakashana Samithi, Udipi.